(१।३२८) इत्यस्यैव ज्वलादिकार्यार्थः पाठः । ह्वोलति । पतति । लृदित्वात् लुङि अङ्, पतः पुम् (७।४।१९) अपप्तत् । उत्पातः । निपातः । पातो राहुः । पतः । नेर्गदनद-(८।४।१७) इति णत्वम्—प्रणिपतति । सनीवन्तर्धभ्रस्ज (७।२।४९) इति वेट् सनि मीमाघु (७।४।५४) इतीस्-अभ्यासलोपौ (द्र० ७।४।५८)—पित्सति, पिपतिषति । पतितः—यस्य विभाषा (७।२।१५) इतीण्निषेधो नास्ति द्वितीयाश्रितातीतपतित (२।१।२४) इति लिङ्गात् । अलङ्कृञ् (३।२।१३६) इतीष्णुच्—उत्पतिष्णुः । चुपद्रुकम्प (३।२।१५०) इति युच्—पतनः । लषपतपद (३।२।१५४) इत्युकञ् प्रपातुकः । विशिपतिपदिस्कन्दाम् (३।४।५६) इति णमुल्—गेहानुप्रपातमास्ते । दाम्नी (३।२।१८२) इति ष्ट्रन्—पत्त्रम् । पतिचण्डिभ्यामालञ् (उ० (१।११६) पातालम् । पतेरङ्गच् पक्षिणि (उ० १।४११) पतङ्गः । पतेरथ्वणः (उ० ३।७४)—पत्सलः । अमिनक्षि (उ० ३।१०५) इत्यत्रन्—पतत्रम् । वीपतिभ्यां तनन् (उ० ३।१५०) पत्तनम् । पतस्थ च (उ० ४।१२) इतीनिः—पन्थाः । शलिपतिपदिभ्यो निर् (तु० उ० श्वेन० ४।१५) पताका । स्पृहिगृहि (३।२।१५८) इति सूत्रात् पतयालुः ॥ ५८१. हुल हिंसासंवरणयोश्च । होलः, हुलः, हुलिः, हुडिः उणादौ हुलर्मेघः[1] ॥८२१-८२३॥

५८२. कथे निष्पाके[2] । कथति । अकथीत् । काथः, क्थः । अस्यर्थे (द्र० ५।२।११५) क्वथिका यवागूः ॥८२४॥

५८३. पथे गतौ[4] । पथति । अपथीत् । पाथः, पथः ॥८२५॥

५८४ मथे विलोडने[5] । मथति । अमथीत् । माथः, मथः ।

---

१. 'हुड्डः' पाठा० ।

२. अत्र 'मेघ' इति पाठो युक्तः प्रतिभाति । अमरटीकायां (२।९।७६) मेघपर्यायव्याख्यानान्त 'हुड्डः' नामापि पठति क्षीरस्वामी । तस्मादत्र 'हुडुर्मेघः' इति युक्तः पाठः । ३. 'कथे विपाके' इति काशकृत्स्नधातुपाठे (पृष्ठ १४८) ।

४. काशकृत्स्नः 'पल शल पथ पथा गतौ च' इति पठति (पृष्ठ १४८) ।

५. 'मथे विलोडने—मथति......मथकः ...' इत्यादि काशकृत्स्नीय-धातुपाठे तट्टीकायां च पाठः (पृष्ठ १४८) ।

नन्दिवाशि (उ० १।३८) इत्युरच्—मथुरा। मन्थ मन्थे[1] मन्थति। क्र्यादौ (९।४२) मथ्नाति ॥८२६॥

५८५. टुवम उद्गिरणे। उद्गिरणं भुक्तस्योर्ध्वगतिः। वमति। वामः, वमः। वमथुः[2]। वमितः। उदित्त्वेके[3]—वान्त्वा वमित्वा। ववृधः खलु वान्ताशी[4]। न शसदद (६।४।१२६) इति ववमुः। ग्लास्नावनुवमाम् (१।५५६) इति वा मित्त्वम्—वामयति, वमयति। जिदत्ति (३।२।१५७) इनीनिः—वामी। नोदात्तोपदेशस्य (७।३।३४) इति निषेधे प्राप्तेऽनाचमिकमि—वमीनाम् (७।३।३४) इति वृद्धिः, ण्वुल्—वामकः। वामयतेर्ल्युट्—योग-वामनम्। न वमतीत्यवमः। घञि—वामः। अस्त्यर्थे (द्र० ५।२।१००) वामनः। वामी अश्वा ॥८२७॥

५८६. भ्रमु चलने। वा भ्राशम्लाश (३।१।७०) इति वा श्यन्—भ्रमति भ्राम्यति। वा जृभ्रमुत्रसाम् (६।४।१२४) इत्येत्वाभ्यासलोपौ—भ्रेमुः बभ्रमुः। भ्रान्त्वा, भ्रमित्वा। भ्रान्तः। णे—भ्रामः। भ्रम इति दुर्गः। भ्रमेश्च उः[5]—अभ्रमुः। इन् (दश० उ० १।४६) भ्रमिः। भ्रमेः सम्प्रसारणं किच्च (तु० उ० ४।१२१) इति भृमिर्वायुः। चलिकमिभ्रमि (उ० ३।१२२) इत्यरन्—भ्रमरः। दिवादौ (४।९९) शमाद्यर्थः पाठः—भ्राम्यति ॥८२८॥

५८७. क्षर सञ्चलने। क्षरति। क्षरिष्यति। क्षारः। क्षारी-णेऽप्यण्कृतं कश्चिद्[6] इति ङीप्। क्षरः। अक्षरम् ॥८२९॥

५८८. क्षल सञ्चये च। सञ्चलने च। क्षलति। चुरादौ क्षल शौचे (चु० १०।५३) क्षालयति ॥८३०॥

---

१. नैतादृशः कश्चिद् भ्वादौ पठ्यते। मन्थ हिंसासंक्लेशनयोः पूर्वत्र (१।३७) पठ्यते। २. 'वमथुः' क्वचिन्नास्ति।

३. तुलनीयम्—'टुवमु उद्गिरणे' काशकृत्स्नपाठः (पृष्ठ १४८)।

४. अनुपलब्धमूलम्।

५. नैतादृशं किञ्चित्सूत्रमुपलभ्यते। यत्र नञ्पूर्वात् भ्रमेर्बाहुलकात् उः प्रत्ययो द्रष्टव्यः।

६. तुलना कार्या—ताच्छीलिके णेऽप्यण्कृतं भवति। परिभाषावृत्ति सीर-देव, पृष्ठ १२२।

५८९. उदात्ता उदात्तेतः ॥

५९०. षह मर्षणे । मर्षणं क्षमा । अयम ५९१. उदात्तोऽनुदात्तेत् । सेडात्मनेपदी च । सहते । सिसहिषते[1] । स्तन्भुसिवुसहां चङि (तु० ८।३।११६) इति षत्वम्—पर्यसीषहत, सः स्विदिस्वदिसहीनां च (८।३।६२) इति सत्वम्—सिसाहयिषति । परिनिविभ्य (८।३।७०) इति षत्वम्—विषहते । सिवादीनां वाऽड्व्यवायेऽपि (८।३।७१) इति षत्वं वा—पर्यसहत पर्यषहत विसहनेच्छायेति साक्षाद्[2]पाठान्नास्ति[3] । तीषसह (तु० ७।२।४८) इति वेट्—सहिता, सोढा । विसोढा सोढः (८।३।११५) इति षत्वाभावः, सहिवहोरोत् (६।३।११२) सोढः । वर्णग्रहणात् साहेरपि सोढा, णिलोपे पूर्वत्रासिद्धे न स्थानिवद्[4] (१।१।५७ वा०) इति ढत्वादि । दाश्वान् साह्वान् मीढ्वांश्च (६।१।१२) इति क्वसौ साह्वान् । शकिसहोश्च (३।१।९९) इति यत्—सह्यम् । ल्युः (द्र० ३।१।१३४) सहन । सहेः पृतनर्ताभ्यां च (८।३।१०९) इति षिः[5]—पृतनाषाट् तुराषाट्, सहेः साडः सः (८।३।५६) इति षत्वम्, षाड्रूपत्वाभावे नास्ति—तुरासाह पुरोधाय (कुमारसम्भव २।१) इति, नहिवृतिवृषि (६।३।११६) इति दीर्घः । अलङ्कृञ् (३।२।१३६) इतीष्णुच्—सहिष्णुः । अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति ण्यन्तात् शः—साहयः । संज्ञायां भृतृ (३।२।४६) इति खच्—सर्वंसहः । असुन् (द० उ० ९।४९) सहः । शकधृष (३।४।६५) इति तुमुन्—सहते भोक्तुम । सहेः ण्वि क्विप् च—षट् । चुरादौ । (१०।२०४)

१ 'सिसहिषते' इति शुद्धः पाठः ।

२. काशिकायां साक्षादादिगणे (१।४।७४) 'विहसने' इति पठ्यते । गणरत्नमहोदधौ ॥ 'विसहने, विहसने' इत्युभयं पठ्यते (पृष्ठ ७७) ।

३. षत्वमिति शेषः ।

४. जर्मनसंस्करणे 'पूर्वत्रासिद्धे न स्थानिवद्' इत्यनन्तरमितिपदनिर्देशो सत्यपि वार्तिकमिममबुद्ध्वा पूर्वं सम्पादकेन 'पूर्वत्रासिद्धेन (८।२।१) स्थानिवद्' इत्येव पाठो विहितः ।

५. 'सहेः पृतनर्ताभ्यां च' (८।३।१०९) इति सूत्रं 'पृतनाषाहम्, ऋताषाहम्' इत्यत्र षत्वविधायकम्, न ण्विप्रत्ययविधायकम् । ण्विप्रत्ययस्तु 'छन्दसि सहः' (३।२।६३) इत्यनेन भवति । लिबिशमहोदयेन इयमशुद्धिर्न बुद्धा ।

पाध्रवाद् वा (१०।२०१) इति णिच्—सहति सातयति ॥८३१॥

५२२. रमु क्रीडायाम् । ५२३. अनुदात्तोऽनुदात्तेत् । अनिडात्मनेपदी च । रमते । व्याङ्परिभ्यो रमः, उपाच्च (१।३।८३,८४) परस्मैपदम्—विरमति, उपरमति । अन्तर्भावितण्यर्थोऽत्र सकर्मकः । विभाषाऽकर्मकात् (१।३।८५) यावद् भुक्तमुपरमते, उपरमति । यमरम-नमातां सक् च (७।२।७३) व्यरंसीत् । रन्ता । रमणः । रमणी । रमः । रमा । रामः । रामा । रम्यः । रतम्बकर्णायो रमिजपोः (३।२।१३) इत्यच् स्तम्बेरमः । निकुनि (उ० २।२) इति क्यन्—रथः । रमेस्त च (तु० उ० ३।१४) इति रत्नम् । रमेर्दैशो ह्रस्व[1] रहः । रण्डा (क्षु० उ० १।२१४) । सौ रमेः कः पूर्वस्य च दीर्घः (तु० उ० ५।२४) सूरतो सुधः । वलिमलिमुनि-पधायाः (उ० २।१४) रुम्रम ॥८३२॥

५२४. षद्लृ विशरणगत्यवसादनेषु[2] । विशरणम् शातनम्, अवसादोऽनुत्साहः । इतो ऽन्ता(२) (१।५९८) पञ्चानिटः परस्मैपदि-नश्च । पाघ्राध्मा (७।३।७८) इति सदेः सीदः—सीदति । सिषत्सति । असदत् । सदेरप्रतेः (तु० ८।३।६६) इति षत्वम्—परिषीदति,—प्रतिषी-दति । सदिस्वञ्ज्योः परस्य लिटि (८।३।११८)—निषसाद । लुपसदचर (३।२।१२१) इति भावगर्हायां यङ्—सासद्यते । सत्सूद्विष (३।२।६१) इति क्विप्, पूर्वपदात् (८।३।१०६) इति षत्वम्—शुचिषत्, परिषत् उपनिषत्, निषण्णः । सादी निषादी । वसिवपि (उ० ४।१२५) इतीञ् सादिः । घः—निषादः । घञ्—विषादः । सदोऽधि । नौ संदः (उ० २।१२२) इति ष्वरच्—निषद्वरः पङ्कः । असुन् (द० उ० ९.४९) सदः समाः । गृधृवीपचिवचि (उ० ४।१६७) इति त्रन्—सात्रम् । सहायौ समज (३।३।९९) इति क्यप्—निषद्या विपणिः । सादकारयोः इत्रिमे (६।३।१२२ वा०) दीर्घः—प्रासादः । दाद्रेदृशि (३।२।१५९) इति रुः—सद्रुः ॥८३३॥

५२५. शद्लृ शातने । शातनं तनूकरणम् । पाघ्राध्मा (७।३।७८) इति शदेः शीयः । शदेः शितः (१।३।६०) इति तङ्—शीयते । शात्य-

१. अत्र कश्चित् पाठस्त्रुटितः प्रतिभाति । "रमेश्च (उ० ४.२१४) इति रंहः । देशो ह्रस्व (दशे० उ० ४।२२०) रहः" इत्येवं पाठेनात्र भाव्यम् ।

२. रमूनं पुस्तकारे (पृष्ठ ८३) ।

ति । अशात्सीत् । शदेरगतौ तः (७।३।४२) शातयति, शातनः, शातनी गौरादिः (गण० ४।१।४१)। शाड्वलमृणपङ्क्तौ । शद्रः, हस्तियापसादः, विशदः । पदिगदि[भ्युम्]१भ्यः (उ० ४।६५) क्रिन्—शद्रिः । शकिम्यां शुरू—(उ० ४।१०२) शद्रुः । शंदुंभ२ इति रफू—शद्दः । दाधेट्सिशदसदो रुः । (३।२।१५९) शद्रुः ॥८३४॥

६०६. क्रुश आह्वाने रोदने च । क्रोशति । क्रोष्टा । आक्रोष्टा । क्रोशः । कुशः, उत्क्रोशः । कुररः । सिवितमिकृति (उ० १।७०) इति तुन्—क्रोष्टुन्३ ॥८३५॥

६०७. बुध अवगमने । अवगमन ज्ञानम्४ । बोधति । अबोधीत्५ । गतिबुद्धिप्रत्यवसानार्थ (१।४।५२) इति कर्तुः कर्मसंज्ञा—बोधयति शिष्यं धर्मम् । बोद्धा । इगुपध (३।१।१३५) इति कः—बुधः । घञ्-बोधः । मतिबुद्धि (३।२।१८८) इति वर्तमाने क्तः—राज्ञां बुद्धः । दिवादौ (४।६४) बुध्यते । भ्वादौ (१।६०१) बोधते, बोधति, बोधिता ॥८३६॥

(उ० ४।११९) इतीन्—रोहिर्मृगः । इगुपधिवुसिभ्य इतिः (उ० १।९७) रोहित् । रुहेरश्च लो वा (उ० ३।९४)—लोहितः, रोहितः, रोहिणी । पन्यत्रापि च (तु० उ० २।१६) इतीनच्—रोहिणः ॥८३७॥

५९९. अनुदात्ता उदात्तेतः ॥

६००. कुच सम्पर्चन-कौटिल्य-प्रतिष्टम्भ-विलेखनेषु । सम्पर्चनं मिश्रता, प्रतिष्टम्भो रोधनम्, विलेखनं कर्षणम् । संकोचयति । संकुचितः । फे (द्र० ३।१।१३५) कुचः । घञ्—संकोच, उत्कोचः । न कादेः (७।३।५९) इति कुत्वं नास्ति ॥८३८॥

६०१. कस गतौ । कसति, उत्कसति । कासयति । विकसितः । कसः, कास । नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकस (तु० ७।४।८४) इति चनीकस्यते । स्थेशभास (३।२।१७५) इति वरच्-विकस्वरः । पिन् कमिपर्वेः (श्वे० उ० १।८३) ऊः—कासूः शक्तिः । शमि कम उकन् (श्वे० उ० २।३२)—संकसुकोऽस्थिरः ॥८३९॥

६०२. उदात्तानुदात्तेतौ । एतौ सेटकौ परस्मैपदिनौ च ॥

६०३. वृत् । ज्वलादयो वृत्ताः ॥

६०४. हिक्क अव्यक्ते शब्दे[1] । इतो गुहपर्यन्ताः (१।६३४) षट्त्रिंशत्[2] सेट उभयतोभाषाश्च । हिक्कते, हिक्कति । हिक्का । हिक्कितम् ॥८४०॥

६०५. अचि गतौ[3] । अञ्चते, अञ्चति[4] । अञ्च्यते । अञ्चितः । अञ्चु गतौ (१।११६) अञ्चति, अच्यते । अक्तः । अचु इत्येके—अचति, अचित्वा, अक्त्वा, अक्तः ॥८४१॥

६०६. डुयाचृ याच्ञायाम् । याचते, याचति । अययाचत् ।

१. 'हिक्क गतौ' इति काशकृत्स्नः । संतोषगतौ इति तट्टीकाकारः (पृष्ठ १५०) ।

२. 'त्रयस्त्रिंशत्' 'त्रयोविंशति' इत्यपपाठौ ।

३. स्मृतमिद पुरुषकारे (पृ० ५१) धातुवृत्तौ च (१५८) । 'अञ्चु व्यक्त गतौ' इति काशकृत्स्नः । अञ्चुम् व्यये गतौ च इति तु शाकटायनः ।

४. 'गतौ गतोपः' इति काशकृत्स्नसूत्रेण गतौ अचति । द्र० तट्टीका पृष्ठ १५१ ।

याचितः । यजयाच (७।३।६६) इति कुत्वाभावः—याच्यम् । ड्वितः क्त्रिः (३।३।८८) याचित्रिमम् । ट्विदिति दुर्गः[1]—याचथुः (द्र० ३।३।८९) । यजयाचयत (३।३।९०) इति नङ्—याच्ञा ॥८४२॥

६०७. रेट्ट परिमापणे । रेट्टते, रेट्टति । अरिरेट्टत ॥८४३॥

६०८. चते चदे च याचने[2] । चकारो मार्थार्थे[3] रेट्टर्थः[4] । मन्दिवाशि (उ०।१।३८) इत्युरच्—चतुरः । चतेरुरन् (उ० ५।५८) चत्वारः । चतेर्यरच्[5]— चत्वरम् ॥८४४, ८४५॥

६०९. प्रोथृ[6] पर्याप्तौ । पर्याप्तिः पूर्णता । प्रोथते, प्रोथति । अपुप्रोथत् । प्रोथोऽश्वघोणा । प्रियं प्रोथमनुव्रजेत्[7] ॥८४६॥

---

१. काशकृत्स्नचन्द्रमैत्रेयसायणादय ट्वितं पठन्ति ।

२. अयमेव पाठश्चन्द्रस्य । काशकृत्स्नशाकटायनसायणाना 'याचने च' ।

३. 'भाषार्थे' क्वचित् ।    ४ धातोरुत्तर पठ्यमानश्चकारो रेट्टधातुमनुकर्षति । तेन 'रेट्ट' धातोः परिमापण याचने चार्थः । इदमेव मत्वाह हेमचन्द्रः—रेट्ट (ग्) परिमापणयाचनयोः (धातुपारा० १।८९७) । क्षीरस्वामिनस्त्वत्र पाठो व्यस्त इति प्रतिभाति । वय तु मन्यामहे 'चते चदे च याचने' इति कस्यचित्प्राचीनस्य श्लोकबद्धस्य धातुपाठस्यायमशः । छन्दोऽनुरोधेन च चकारो भिन्नक्रमः, पूर्वधात्वर्थसमुच्चयार्थः । एव चाष्टाध्यायामपि दृश्यते—'पक्षिमत्स्यमृगान् हन्ति, परिपन्थ च तिष्ठति' इत्यनोत्तरसूत्रे हन्त्यर्थमनुव्याप्यनश्चकारो मध्ये पठ्येत ।

५ उणादौ (२।१२१) च तेः ष्वरच्प्रत्ययो विधीयेत ।

६. काशकृत्स्नधातुपाठे 'प्रथृ पृथृ पृथ व्याप्तौ' (पृष्ठ १५३) इति त्रयो धातवः पठ्यन्ते । तथा सति पृथुपृथ्व्यादिषु 'प्रथ विस्तारे' इत्यस्मात् सम्प्रसारणविधानमनर्थकमेव । वस्तुतस्तु 'यज इज, वप उप, प्रथ, पृथ' इत्यादयो मूलतो द्विरूपाः धातवः । यास्कोऽपि 'तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातुर्भवति तद्द्विप्रकृतीना स्थानमिति प्रदिशन्ति । तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत । तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति' (निरुक्त २।२) इति वदन् द्विरूपान् धातून् स्वीचकार । यजममानार्थस्य इजधातोः प्रयोगोऽप्युपलभ्यते । यथा—'यानि यज्ञैरिहेज्यन्ति (महा० शान्ति० २६३।२९) इति ।

७. अनुपलब्धमूलम् । शिविरिशनाथ महाभाष्यस्थ (१।४।५६) सदृशा निर्दिष्टा,

■ तत्रैतादृशः पाठः ।

६१०. मिथृ मेथृ[1] मेधाहिंसनयोः । मेथते, मेथति । किति गुणविकल्पार्थौ द्वौ—मिथ्यते, मेथ्यते । अमिमेथत् । मेथोऽस्त्रि । गौरादौ (गण० ४।१।४१) मेथी । मेथीवृक्षोऽपि हि भ्राम्यन् धामधाम करोति गौः (द्र० सुभाषितावली २९५८) । अमरसिंहस्तु—पुंसि मेथिः खले दारु न्यस्तं यत् पशुबन्धने । (२।९।१५) । मिद मेद इति दुर्गः ॥८४७,८४८॥

६११. मेधृ संगमे च । चकारात् मेधाहिंसनयोः । मेधते, मेधति । अमिमेधत् । मेधा । मेध्यम् । गृहमेधी । अश्वमेधः । मेधिः ॥

६१२. णिदृ णेदृ कुत्सासंनिकर्षयोः । प्रणेदति । निदते, नेदते । अनिनेदत् । णिदृ णेदृ इति प्राच्यो हेलाकिनः[2] ॥८५०,८५१॥

६१३. शृधु मृधु उन्दे । उन्दः क्लेदनम् । शर्धते, शर्धति । शृद्ध्वा, शर्धित्वा । शृद्धः । शृधु शब्दकुत्सायाम् (१।५०६) शर्धते । मर्धते मर्धति । मृधं समरः ॥८५२,८५३॥

६१४. बुध बोधने । बोधते, बोधति । बुधिर् इति नन्दी[3]—अबुधत्, अबोधीत् । बोधिता । पूर्वस्य (१।५९७) बोद्धा ॥८५४॥

६१५. उबुन्दिर् निशामने । निशामनमालोचनम्[4] । बुन्दते, बुन्दति । अबुदत्, अबुन्दीत् । बुत्वा, बुन्दित्वा । बुन्नः । धान्तोऽयमिति नन्दी[5] । उबोदिर् इत्यन्ये ॥८५५॥

६१६. वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वादित्रं वाद्यभाण्डम्, तस्य वादनार्थं ग्रहणम् । वेणते, वेणति, अविवेणत् । वासनामारना (उ० ३।१२९) इति वीणा । इन् (दश० उ० १।४६)

१. स्मृतोऽयं पाठः (मनुवृत्ति पृष्ठ १४६, पुरुषकार पृष्ठ ८०) । सि० कौ० मत्र दृष्टः ।       २. असम्प्रदायोऽयं पाठः ।

३. काशकृत्स्नोऽपि इरिदितमाह (पृष्ठ १५४) अनिरितं चन्द्र (१।०९९) ।

४. 'चानुपलम्भनम्' इत्यधिकं क्वचित् ।

५. 'उचुन्दिर्' इति चन्द्र (१।६००) काशकृत्स्नधातुपाठे 'चुदिर् निशामने' इति पठ्यते (पृष्ठ १५४), परन्तु तट्टीकायां 'चुन्दति चुन्दते' इत्युदाहरणदर्शनात् 'चुन्दिर्' इति शुद्धः पाठो द्रष्टव्यः ।

वेणिः, वेणिका, वेणी । वेनिस्तु वीज्या-वरिभ्यो निः (उ० ४।४८) । णः — वेण्णाख्या नदी ॥८५६॥

६१७. खनु अवदारणे । खनते, खनति । खात्वा, खनित्वा । जनसनखनां सञ्झलोः (६।४।४२) आत्वम् — खातः । ये विभाषा (६।४।४३) खायते, खन्यते । गमहनजनखन (६।४।९८) इत्युपधालोपः — चख्नतुः । ई च खनः (३।१।१११) — खेयः । शिल्पिनि ष्वुन्, नृतिखनिरञ्जिभ्यश्च (३।१।१४५, सूत्रं वार्तिकं च) खनकः । जनसनखनक्रम (३।२।६७) इति विट् — बिसखाः । अन्येष्वपि दृश्यते (३।२।१०१) डः — परिखा । खन्यते — खम् । डिद् खनेर्मुट् चोदात्तः (उ० ५।२०) — मुखम् । वर्तिलूधूसूखन (३।२।१८४) इतीत्रन् — खनित्रम् । उषिखनिभ्यां कित् (उ० ४।१६२) खात्रम् । आङ्परयोः खनिशॄभ्यां डिच्च (उ० १।३३) — आखुः । खनिकष्यज्यसि (तु० उ० ४।१४०) इतीन् — खनिराकरः । आङि पणिपनिपतिखनिभ्यः (उ० २।४५) इकन् — आखनिकः । खनो घ च (३।३।१२५) — आखनः ॥८५७॥

६१८. चीवृ आदानसंवरणयोः । [ चीवते, चीवति । ] चीबृ इति दुर्गः — अचिचीवत् । छित्वरादी ( दु० उ० ३।१ ) चीवरं मुनिवासः ॥८५८॥

६१९. चायृ पूजानिशामनयोः । चायते, चायति, अचचायत् । चायः की (६।१।३५) छन्दसि — चिक्युः । स्फायिरमिभ्येभ्यो यङि[1], (६।१।२९) चायः की ( ६।१।२१ ) — चेकीयते । अपचितश्च ( ७।२।३० ), पक्षे — अपचायितम् । चकन्याद्[2] (७।२।३० धा०) अपचितिः । चायः की च (तु० उ० १।७४) इति तुः — केतुः ॥८५९॥

६२०. व्यय गतौ । व्ययते, व्ययति । व्याययति । अतो हल (७।२।७) इति — अव्ययीत् । चुरादावन्तः (१०।३१६) व्यययति ॥८६०॥

६२१. दाशृ दाने । दाशते, दाशति । अददाशत् । कसौ — दाश्वान् (६।१।१२) साधुः । दाशगोघ्नौ सम्प्रदाने (३।४।७३) । पुरो

१. 'चायः की' सूत्रं षष्ठाध्याये प्रथमे पादे द्विः पठ्यते, तदन्यतरस्थानमुद्दि- श्येति परिज्ञानार्थं सूत्रं निर्दिष्टम् ।

२. 'निचि नियमिति चक्रन्नादम्' इत्यर्थेनेति शेषः ।

दाश्यते—पुरोडाशः, पृषोदरादित्वात् (६।३।१०९) डत्वम्, एवं दुःखेन दाश्यते दूडाशः। दाशृ दान इति कौशिकः ॥८६१॥

६२२. अय गतौ। अयते। उदयति दिननाथः। (द्र० १।२१८)

६२३. भेपृ भ्रेपृ भये। ६२४. भ्रेपृ चलने च। भेपते, भेपति। अबिभेपत्। भेपयति। बिभेतेः (३।२) मुण्डो भीषयते (द्र० ७।३।४०)। भ्रेपते, भ्रेपति। भ्रेपः ॥८६३,८६४॥

६२५. अस गतिदीप्त्यादानेषु। असते, असति। लावण्य उत्पाद्य इवास यत्नः (कुमारसम्भ० १।३५) इत्यत्र आसेर्त्यसतेरिति वामनः (काव्यालं० ५।२।२७) अस्तेरित्येके। अदादौ अस भुवि (२।५८) अस्ति। [अष इत्येके[1]] ॥८६५॥

६२६. स्पश बाधनस्पाशनयोः। स्पाशनं ग्रन्थनम्[2]। स्पशते, स्पशति। संयम्मयतः स्पाशा रज्जुः[3] स्पशश्चरः। पस्पशा उपोद्घातः। चुरादौ स्पश बाधने[4] (तु० १०।१३१) पश बन्धने (१०।१६६)—स्पाशयते, पाशयति। पष इत्येके[5]—पापः, पाषाणः ॥८६६॥

६२७. लप कान्तौ। कान्तिरिच्छा वा। भ्राशम्लाश (३।१।७०) इति वा श्यन्—अभिलष्यते, अभिलषते, अभिलष्यति अभिलषति। लषपत्कम्य (३।२।१५४) इत्युकञ्—अभिलाषुकः। लषेः श च (दश० उ० ५।१४) इत्युनन्—लशुनम् ॥८६७॥

६२८. चष भक्षणे। चषते, चषति। चाषः। चषकः। स्नानमिवर्षासि (उ० ४।२०७) इति चषालो यूपकटकः ॥८६८॥

---

१ उद्धृतमिदं धातुवृत्तौ (पृष्ठ १९८)। अत्र पाठस्त्रुटितः प्रतिभाति।

२. 'स्पश बाधनस्पर्शनयोः। स्पर्शनं ग्रथनम्' इति स्वामी (द्र० धातुवृत्तिः पृष्ठ १९८)।

३. द्र०—संयोमयतः स्पाशारज्जुर्भवति (महा० ६।१।६८)।

४. 'स्पश ग्रहणसंश्लेषणयोः' इति चुरादौ (१०।१३१) पाठः। तेन च 'भ्वादौ स्पश बाधने' इत्युक्तम्।

५. उद्धृतं धातुवृत्तौ (पृष्ठ १९८)। अत्र 'एके' पदेन दुर्गोऽभिप्रेतः। यदाह चुरादौ (१०।१६६) 'उभयत्रापि मूर्धन्यान्त इति दुर्गः'।

६२९. छप हिंसायाम् । [छपते, छपति] ॥८६९॥

६३०. क्षप आदानसंवरणयोः । क्षपते, क्षपति । क्षपः । भष हिंसार्थः (१।४५८) क्षपति ॥८७०॥

६३१. ग्लक्ष भक्षणे[1] । ग्लर्व इति दुर्गः ॥८७१॥

६३२. दाश दाने । दासते, दासति । दासः । आद्यो (१।६२०) दाशृ, अयं दाष इत्येके ॥८७२॥

६३३. माहृ माने । मानं वर्तनम् । माहा गौः ॥८७३॥

६३४. गुहू संवरणे । ऊदुपधाया गोहः (६।४।८९) गूहते, गूहति, अघुक्षत् । तङि तु लुग् वा दुहदिहलिहगुह (७।३।७३) इत्यगूढ अघुक्षत । सनि गहगुहोश्च (७।२।१२) इति नेट्—जुघुक्षति । चङि ह्रस्वो नेष्यते—अजूगुहत् । गूढा, गूहिता । गूढः । भिदादौ (गण० ३।३।१०४) गुहा गिर्योषध्योः । के (द्र० ३।१।१३५) गुहः । शंसिदुहिगुहिभ्यः क्यप् वा (३।१।१०९ वा०) गुह्यम्, गृह्यम् । उणादौ—गह्वरः ( द्र० उ० ३।१ ) गुहेर्गहिः—गहनम् ॥८७४॥

६३५. उदात्ताः स्वरितेतः ॥

६३६. श्रिञ् सेवायाम्, उदात्तः । श्रयते, श्रयति । श्रयिता । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) अशिश्रियत् । सनीवन्तर्ध (७।२।४९) इति नेट्—शिश्रीषति । शिश्रयिषति । यस्य विभाषा (७।२।१५) इति इति षेट्—श्रितः । श्रयुकः किति (७।२।११)—श्रित्वा । श्रिणीभुवोऽनुपसर्गे (३।३।२४) वा घञ्—श्रायः, श्रयः[2] । उदि श्रयतियौति (३।३।४९) इति घञ्—उच्छ्रायः । बाहुलकात्[3] पतनान्ताः समुच्छ्रया (रामा० २।१०५।१६)

१. उद्धृतमिदं धातुवृत्तौ (पृ० १५९) ।

२. सर्वहस्तलेखेषु वा पञ्चने 'श्राय अय.' इति चोदाहृतेऽपि, कुतो वा महर्ष मत्रभाति ग्रन्थकार इति न ज्ञायते ।

३. कृत्यल्युटो बहुलम् ( ३।३।११३ ) इत्यत्र निर्दिष्टाद् बहुलग्रहणादिति भाव. । लिङ्गिशमद्र्देशेन स्वेनदपरिज्ञाय चौरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०।३२४) इति सूत्रस्य निर्देशः कृतः । काशिकाकारस्तु सिंहावलोकितन्यायेनोत्तर-सूत्रस्थ विभाषाग्रहणं संबध्नाति ।

महा० शान्ति० ३३०।२०)[1]। वहिश्रिश्रुयु (दश० उ० १।२१) इति णिः—श्रेणिः। क्रिप् वचिप्रच्छि (उ० २।५७) इति क्विब्दीर्घौ—श्रीः। श्मनि श्रयतेर्डुन् (उ० ५।२८) श्मश्रु। श्रयतेः स्वाङ्गे शिट् किच्च (दश० उ० ९।५४ कपाठः) इत्यसुन्—शिरः। आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४।१३८) इतीन् डिच्च—अश्रिः॥८७५॥

६३७. हृञ् हरणे। इतश्चेङ्पर्यन्ता (१।६८९) अष्टषष्टिरनिटः, परस्मैपदिनश्च ञिमृङ्डिद्वर्जम्। हरते, हरति। हरतेर्गतिताच्छील्ये (१।३।२१ वा०) तङ्—पैतृकमश्वा अनुहरन्ते। व्यवहृपणोः समर्थयोः (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। ऋद्धनोः स्ये (७।२।७०) इतीट्—हरिष्यति। हृक्रोरन्यतरस्याम् (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। श्याद्व्यधा (३।१।१४१) इति णः—अवहारो ग्राहः। हरतेरनुद्यमनेऽच् (३।२।९) रिक्थहरः[2]। वयसि च (३।२।१०) कवचहरः। आङि ताच्छील्ये (३।२।११) पुष्पाहरः। हरतेर्दृतिनाथयोः पशौ (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। अध्यायन्यायोद्यावसंहार(३।३।१२२) इति करणे घञ्-अध्याहारः। हृसृरुहियुषिभ्य इतिः (उ० १।९७) हरित् वर्णो त्रिषु च। श्यास्त्याहृञ् (उ० २।४६) इतीनच्—हरिणः। हृश्याभ्यामितन् (उ० ३।९३) हरितः। वृहोः षुग्दुकौ च (तु० उ० ४।१००) इति कयन्—हृदयम्। पद्दन्नादौ (द्र० ६।१।६३) हृत् प्रकृत्यन्तरमप्यस्ति। हृपिषि (तु० उ० ४।११९) इतीन् हरिः। अनिहृभ्यामिमनिच् (दश० उ० ६।७८) हरिमाणं च नाशय (ऋ० १।५०।११)। हृयमस् (तु० दश० उ० ९।१७६) इति ईमनिन्—हरीमा। वेञो डिद्, ग्रे हरतेः कृत्ये (दश० उ० २।६२,६३) प्रहिः। हृहृभ्यामेणुः (तु० उ० २।१) हरेणुर्गन्धद्रव्यम्, सस्यभेदश्च॥८७६॥

६३८. भृञ् भरणे। भरते, भरति। ह्वावी इयम् (३।५) बिभर्ति। भारः। भृतः। क्र्यादौ भृ भरणे (९।२०) भृणाति। भरः ऋदोरप् (३।३।५७)। भरितः। संज्ञायां भृतॄ (३।२।४६) इति खच्—विश्वम्भरा। चवे भृञः (उ० २।३) क्थन्—अवभृथो यज्ञान्तः[3]। थपवन्-कसृदृभ्यः (उ०

१. अत्र लिबिशमहोदयेन कारिकायां (३।३।४६) एव निर्देशः कृतः, न त्वाकरग्रन्थस्य। २. 'रिक्थहरः' इति तु शुद्धः पाठः।

३. सोमयागानां समाप्तौ क्रियमाणं स्नानमवभृथशब्देनोच्यते।

६२९. छप हिंसायाम् । [छपते, छपति] ॥८६९॥

६३०. झप आदानसंवरणयोः । झपते, झपति । झपः । भष हिंसार्थः (१।४५८) झषति ॥८७०॥

६३१. म्लक्ष भक्षणे[1] । म्लक्षं इति दुर्गः ॥८७१॥

६३२. दाश्च दाने । दासते, दासति । दासः । आद्यो (१।६२०) दाशृ, अयं दाश्च इत्येके ॥८७२॥

६३३. माह्व माने । मानं वर्तनम् । माह्या गौः ॥८७३॥

६३४. गुहू संवरणे । ऊदुपधाया गोहः (६।४।८९) गूहते, गूहति, अघुक्षत् । तङि तु लुग् वा दुहदिहलिहगुह (७।३।७३) इत्यगूढ अघुक्षत । सनि ग्रहगुहोश्च (७।२।१८) इति नेट्—जुघुक्षति । चङि ह्रस्वो नेष्यते—अजूगुहत् । गूढा, गूहिता । गूढः । भिदादौ (गण० ३।३।१०४) गुहा गिर्योषध्योः । के (द्र० ३।१।१३५) गुह । शंसिदुहिगुहिभ्यः क्यप् वा (३।१।१०९ वा०) गुह्यम्, गृह्यम् । उणादौ—गह्वरः (द्र० उ० ३।१) गुहेर्गहिः—गहनम् ॥८७४॥

६३५. उदात्ताः स्वरितेतः ॥

६३६. श्रिञ् सेवायाम्, उदात्तः । श्रयते, श्रयति । श्रयिता । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) अशिश्रियत् । सनीवन्तर्ध (७।२।४९) इति नेट्—शिश्रीषति । शिश्रयिषति । यस्य विभाषा (७।२।१५) इति इति नेट्—श्रितः । श्युकः किति (७।२।११)—श्रित्वा । श्रिणीभुवोऽनुपसर्गे (३।३।२४) वा घञ्—श्रायः, श्रयः[2] । उदि श्रयतियौति (३।३।४९) इति घञ्—उच्छ्रायः । बाहुलकात्[3] पतनान्ताः समुच्छ्रयाः (रामा० २।१०५।१६)

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५९) ।

२. सर्वेहस्तलेखेषु वा पच्यते 'श्राय श्रय.' इति चोदाहृियते, कुतो वा महर्षं सबभाति ग्रन्थकार इति न ज्ञायते।

३. कृत्यल्युटो बहुलम् (३।३।११३) इत्यत्र निर्दिष्टाद् बहुलग्रहणादिति भावः । लिबिशमहोदयेन त्वेनदपरिज्ञाय क्षीरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०।३२४) इति सूत्रस्य निर्देशः कृतः । काशिकाकारस्तु सिंहावलोकित यायेनोत्तर-सूत्रस्थं विभाषाग्रहणं मंनभाति ।

महा० शान्ति० ३३०।२०)[1]। वहिश्रिश्रु (दश० उ० १।२१) इति णिः—श्रेणिः। क्विब् वचिप्रच्छि (उ० २।५७) इति क्विब्दीर्घौ—श्रीः। श्मनि श्रयतेर्डुन् (उ० ५।२८) श्मश्रु। श्रयतेः स्वाङ्गे शिरः किच्च (दश० उ० ९।५४ कपाठः) इत्यसुन्-शिरः। आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४.१३८) इतीन् डित्—अश्रिः॥८७५॥

६३७. हृञ् हरणे। इतस्त्रैङ्पर्यन्ता (१।६८९) अनुपदिष्टनिर्देशः, परस्मैपदिनश्च ञिन्ङिद्वर्जम्। हरते, हरति। हरतेर्गतिताच्छील्ये (१।३।२१ वा०) तङ्—पैतृकमश्वा अनुहरन्ते। व्यवहृपणोः समर्थयोः (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। ऋद्धनोः स्ये (७।२।७०) इतीट्-हरिष्यति। हृक्रोरन्यतरस्याम् (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। श्याद्व्यधा (३।१।१४१) इति णः—अवहारो ग्राहः। हरतेरनुद्यमनेऽच् (३।२।९) रिक्थहरः[2]। वयसि च (३।२।१०) कवचहरः। आङि ताच्छील्ये (३।२।११) पुष्पाहरः। हरतेर्दृतिनाथयोः पशौ (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। अध्यायन्यायोद्यावसंहाराश्च (३।३।१२२) इति करणे घञ् अध्याहारः। सृवृहृदिपृविभ्य इतिः (उ० २।९७) हविद् घर्मो त्रिफ् च। श्यास्त्याहृञ् (उ० २।४६) इतीनच्-हरिणः। हृश्याभ्यामितन् (उ० ३।९३) हरितः। हृञो दुग् दुगौ च (तु० उ० ४।१००) इति कयन्-हृदयम्। पद्दन्नादौ (प्र० ६।१।६३) हृत् प्रकृत्यन्तरमप्यस्ति। हृपिषि (तु० उ० ४।११९) इतीन् हरिः। जनिहृभ्याम् इमनिन् (दश० उ० ६।७८) हरिमाणं च नाशय (ऋ० १।५०।११)। हृयमृष (तु० दश० उ० ४।७६) इति ईमनिन्-हरीमा। वेञो डिद् त्रे हरतेः कृने (दश० उ० २।१०,११) प्रहिः। हृदम्यामेणुः (तु० उ० २।१) हरेणुर्गन्धद्रव्यम्, सत्यमेदश्च ॥८७६॥

६३८. भृञ् भरणे। भरते, भरति। ह्वादौ डुभृञ् (३।५) बिभर्ति। भारः। भृतः। क्र्यादौ भृ भरणे (९।२०) भृणाति। भरः ऋदोरप् (३।३।५७)। भरितः। संज्ञायां भृतॄ (३।२।४६) इति खच्-विश्वम्भरा। अवे भृञः (उ० २।३) क्थन्-अवभृथो यज्ञान्तः[3]। अण्डन् कृसृभृवृञः (उ०

१. अत्र लिपिकारमहोदयेन काशिकायाः (३।३।४६) एव निर्देशः कृतः, न त्वाकरग्रन्थस्य।

२. 'रिक्थहरः' इति तु शुद्धः पाठः।

३. सोमयागानां समाप्तौ क्रियमाणं स्नानमवभृथशब्देनोच्यते।

६२९. छप हिंसायाम् । [छपते, छपति] ॥८६९॥

६३०. ज्ञप आदानसंवरणयोः । ज्ञपते, ज्ञपति । ज्ञपः । झप हिंसार्थः (१।४५८) झपति ॥८७०॥

६३१. भ्लक्ष भक्षणे[1] । प्लव इति दुर्गः ॥८७१॥

६३२. दाशृ दाने । दाशते, दाशति । दाशः । आद्यो (१।६२०) दाशृ, अयं दाश इत्येके ॥८७२॥

६३३. माहृ माने । मानं वर्तनम् । माहा गौः ॥८७३॥

६३४. गुहू संवरणे । ऊदुपधाया गोहः (६।४।८९) गूहते, गूहति, अघुक्षत् । लुङि तु लुग् वा दुहदिहलिहगुहः (७।३।७३) इत्यगूढ अघुक्षत । सनि ग्रहगुहोश्च (७।२।१२) इति नेट्—जुघुक्षति । ण्यन्ते ह्रस्वो नेष्यते—अजुगूहत् । गूढा, गूहिता । गूढः । भिदादौ (गण० ३।३।१०४) गुहा गिर्योषध्योः । के (द्र० ३।१।१३५) गुहः । शंसिदुहिगुहिभ्यः क्यप् वा (३।१।१०९ वा०) गुह्यम्, गोह्यम् । उणादौ—गह्वरः (द्र० उ० ३।१) गुहेर्गहिः—गहनम् ॥८७४॥

६३५. उदात्ताः स्वरितेतः ॥

६३६. श्रिञ् सेवायाम्, उदात्तः । श्रयते, श्रयति । श्रयिता । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) अशिश्रियत् । सनीवन्तर्ध (७।२।४९) इति नेट्—शिश्रीषति । शिश्रयिषति । यस्य विभाषा (७।२।१५) इति इति नेट्—श्रितः । श्र्युकः किति (७।२।११)—श्रित्वा । श्रिणीभुवोऽनुपसर्गे (३।३।२४) वा घञ्—श्रायः, श्रयः[2] । उदि श्रयतियौति (३।३।४९) इति घञ्—उच्छ्रायः । बाहुलकात्[3] पतनान्ताः समुच्छ्रयाः (रामा० २।१०५।१६)

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५९) ।

२. सर्वहस्तलेखेषु वा पक्षने 'श्राय, श्रयः' इति चोदाह्रियेते, कुतो वा महद्यं मत्रभाति ग्रन्थकार इति न ज्ञायते ।

३. कृत्यल्युटो बहुलम् (३।३।११३) इत्यत्र निर्दिष्टाद् बहुलग्रहणादिति भाव । लिखितग्रहणेन त्वनदपरिज्ञान चौरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०।३२४) इति सूत्रस्य निर्देशः कृतः । काशिकाकारस्तु सिंहावलोकितन्यायेनोत्तर-सूत्रस्थं विभाषाग्रहणं संबध्नाति ।

महा० शान्ति० ३३०।२०)[1]। वहिश्रिश्रु (दश० उ० १।२१) इति णिः—श्रेणिः। क्विब्वचिप्रच्छि (उ० २।५७) इति क्विब्दीर्घौ—श्रीः। श्मनि श्रयतेर्डुन् (उ० ५।२८) श्मश्रु। श्रयतेः स्वाङ्गे शिरः किच्च (दश० उ० ९।५४ कपाठः) इत्यसुन्—शिरः। आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४।१३८) इतीन् डित्—अश्रिः॥८७५॥

६३७. हृञ् हरणे। इतश्चैङ्पर्यन्ता (१।६८९) अष्टषष्टिरनिटः, परस्मैपदिनश्च ञिन्ङिद्वर्जम्। हरते, हरति। हरतेर्गतिताच्छील्ये (१।३।२१ वा०) तङ्—पैतृकमश्वा अनुहरन्ते। व्यवहृपणोः समर्थयोः (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। ऋद्धनोः स्ये (७।२।७०) इतीट्—हरिष्यति। हृक्रोरन्यतरस्याम् (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। श्याद्व्यधा (३।१।१४१) इति णः—अवहारो ग्राहः। हरतेरनुद्यमनेऽच् (३।२।९) रिक्तहरः[2]। वयसि च (३।२।१०) कवचहरः। आङि ताच्छील्ये (३।२।११) पुष्पाहरः। हरतेर्दृतिनाथयोः पशौ (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। अध्यायन्यायोद्यावसंहाराश्च (३।३।१२२) इति करणे घञ् अध्याहारः। हसिरुहियुषिभ्य इतिः (उ० १।९७) हरिद् वर्णे क्विप् च। श्यास्त्याहृञ् (उ० २।४६) इतीनच्—हरिणः। हृश्याभ्यामितन् (उ० ३।९३) हरितः। वृहोः षुग्दुकौ च (तु० उ० ४।१००) इति कयन्—हृदयम्। पद्दन्नादौ (द्र० ६।१।६३) हृत् प्रकृत्यन्तरमप्यस्ति। हृपिषि (तु० उ० ४।११९) इतीन् हरिः। जनिहृभ्यामिमनिन् (दश० उ० ६।७८) 'हरिमाणं च नाशय' (ऋ० १।५०।११)। हृपृथ (तु० दश० उ० ६।७६) इति इमनिन्-हरीमा। वेञो डिद्, मे हरतेः कूपे (दश० उ० १।६२,६३) प्रहिः। कृहृभ्यामेणुः (तु० उ० २।१) हरेणुर्गन्धद्रव्यम्, सस्यभेदश्च॥८७६॥

६३८. भृञ् भरणे। भरते, भरति। ह्वादौ डुभृञ् (३।५) बिभर्ति। भारः। भृतः। क्र्यादौ भृ भरणे (९।२०) भृणाति। भरः ऋदोरप् (३।३।५७)। भरितः। संज्ञायां भृतृ (३।२।४६) इति खच्—विश्वम्भरा। अवे भृञः (उ० २।३) कथन्—अवभृथो यज्ञान्तः[3]। अथडन्-दसृभृमृभ्यः (उ०

१. अत्र लिबिशमहोदयेन काशिकायां (३।३।४९) एव निर्देशः कृतः, न व्याकरणान्तरस्य। २. 'रिक्थहरः' इति तु शुद्धः पाठः।

३. सोमयज्ञानां समाप्तौ क्रियमाणं स्नानमवभृथशब्देनोच्यते।

२।१२५) भरण्ड आप्लवनम्[1] । भृगम । भृङ्गः । भुरिक् छन्दः । कुर्भश्च (दु० उ० १।२२) इति यन्त्रः । भरतः । भरुदेशः[2] ॥८७७॥

६३९. कृञ् करणे[3] । करते, करति । स्वादौ कृञ् हिंसायाम् (५।७) कृणुते, कृणोति । तनादौ डुकृञ् करणे (८।११) कुरुते, करोति । उणादौ कारुः, कारिः, करणिः सदृशः करेणुः[1] क्रतुः, करकः=फलग्रादिः, कृकः, कर्कः=सितः, चक्रम्, करण्डः, कर्म, करकमः, कासरः ॥८७८॥

६४०. णीञ् प्रापणे । प्रापणमासादनम् । नयते, नयति । प्रणेता । संमानन (१।३।३६) इत्यात्मनेपदम्—नयते चार्वी[4] लोकायते । कर्तृस्थे चाशरीरे कर्मणि (१।३।३७) क्रोधं विनयति । ह्रदिशादिनोद्दत्तीनां प्रतिषेधार्[5] (इ० १।४।५२ वा०) नाययति भारं ग्रामं चैत्रेण ।

विपूयविनीय (३।१।११७) इति विनीयः कल्के साधुः । आनाय्योऽनित्ये (३।१।१२७)—आनाय्यो दक्षिणाग्निः, आनाय्यो गोधुक्[1] । प्रणाय्योऽसम्मतौ[2] (३।१।१२८)—प्रणाय्यायान्तेवासिने ब्रह्म ब्रूयात् (तु० छा० उ० ३।११।५) असम्मतसंसारायेत्यर्थः । पाय्यसान्नाय्य (३।१।१२९) इति सान्नाय्यं हविः । दुन्योरनुपसर्गे (३।१।१४२) इति कर्तरि णः—नायः । श्रिणीभुवोऽनुपसर्गे (३।३।२४) घञ्—नायः । बाहुलकाद्[3] नयः । यवोदोर्नियः (३।३।२३)—प्रणायः, उन्नायः । परिन्योर्नीणोर्द्यूताभ्रेषयोः (३।३।३७)—परिणायः । आत्ममानायः (३।३।१२४) । सत्सूद्विष (३।२।६१) इति क्विप्—ग्रामणीः । दाम्नीशस (३।२।१८२) इति ष्ट्रन्—नेत्रम् । रक् (द्र० उ० २।१३)—नीरम् । नप्तृनेष्टृ (उ० २।९६) इति नेष्टा ऋत्विक् । हनिकुषि (उ० २।२) इति क्थन्—सुनीथः । नयतेर्डिच्च (उ० २।१०१) इति ऋः—ना नरौ नरः । पानीविषिभ्यः पः (उ० ३।२३) नीपः । नियो मिः (उ० ४।४३)—नेमिः ॥८७९॥

९४१. धेट् पाने[4] । टकारः स्तनन्धयीत्यादौ ङीबर्थः[5] (द्र० काशिका २।३।२९) । धयति । विभाषा धेट्श्व्योः (३।१।४९) चङ्—अदधत्, अधासीत् । विभाषा घ्राधेट्शा (२।४।७८) इति सिज्लुक्—अधात् । पाघ्रा (३।१।१३७) इति शः—उद्धयः । नासिकास्तनयोर्ध्माधेटोः (३।२।२९) खश्—स्तनन्धयः । नाडीमुष्ट्योश्च (३।२।३०) मुष्टिन्धयः । धापेट्सिशदसदो क्नुः (३।२।१५९) धारुर्गौः । ध्मः कर्मणि ष्ट्रन् (३।२।१८१)—धात्री । धेट इच्च (उ० ३।३४)—धेनुः । ध्यायतेस्तु (१।६।३७) धीः, फते

१. यथा तु महाभाष्यं तथा दक्षिणाग्नावेवेदं निपातनम्, तथापि यस्य दक्षिणाग्नेर्गार्हपत्यादभिनीय योनिस्तस्यैव । तेन वैश्यकुलादाहृते दक्षिणाग्नावपि 'प्रानेय' इत्येव भवति । गोधुक्शब्दार्थे 'आनाय्य' पदमन्यत्र न दृष्टम् ।

२. 'समते' पाठा० ।

३. कृत्यल्युटो बहुलम् (पा० ३।१।११३) इति बहुलवचनादिति भावः । एतदपरिज्ञाय लिखितमस्योदयेन यत्र 'बहुलमेतन्निदर्शनम्' (१०।३२४) इति धातुसूत्रस्य संख्या निर्दिष्टा ।

४. 'धकारादयोऽनुदात्ता उदात्तेतः' इति धातुवृत्तिः (पृष्ठ १८४) । तथोदात्तत्वं सति सम्भवे ज्ञेयम् ।  ५. स्मृतं धातुवृत्तौ (पृष्ठ १६६) ।

(६।४।६६) घीतः[1] ॥८८०॥

६४२. ग्लै हर्षक्षये । हर्षक्षयोऽत्र धात्वर्थः[2] । ग्लायति । वान्यस्य संयोगादेः (६।४।६८) इति लिङि एत्वम्—ग्लेयात्, ग्लायात् । ग्लास्नावनुवमां च (१।५५६) इति वा मित्त्वम्—ग्लपयति, ग्लापयति । संयोगादेरातो धातोर्यण्वतः (८।२।४३) निष्ठानत्वम्—ग्लानः । ग्लाजिस्थश्च क्स्नुः (३।२।१३९)—ग्लास्नुः । ग्लानुदिभ्यां डौः (उ० २।६४)—ग्लौश्चन्द्रः । ग्लाम्लाज्याहाभ्यो निः (३।३।९५ वा०) ग्लानिः । शकधृषज्ञाग्ला (३।४।६५) इति तुमुन्—ग्लायति भोक्तुम् ॥८८१॥

६४३. म्लै गात्रविनामे । विनाम कान्तिक्षयः । म्लायति । म्लेयात, म्लायात् । म्लानः ; बाहुलकात्[3] म्लानिः ॥८८२॥

६४४. धै न्यङ्गविधाने[4] । न्यङ्ग कुत्सिताङ्गम् । धायति ॥ ८८३॥

६४५. द्रै स्वप्ने । द्रायति । स्पृहिगृहि, (३।२।१५८) इत्यालुच्—निद्रालुः । क्ते (द्र० ८।२।५३) निद्राणः । तारकादित्वात् (द्र० गण० ५।२।३६) निद्रितः । आतश्चोपसर्गे (३।३।१०६) अङ्—निद्रा । द्रा कुत्सायां गतौ (२।४६) द्राति, विद्राणः ॥८८४॥

६४६. ध्रै तृप्तौ । ध्रायति । ध्राणः । भाष्ये नत्वं नेष्यते[5]—ध्रातः ॥८८५॥

६४७. ध्यै चिन्तायाम् । अधीगर्थदयेशां कर्मणि (२।३।५२) षष्ठी—मातुर्ध्यायति । ध्यापयति स्वयमेवेति येरणौ (१।३।६७) इति तङ् नास्ति, आध्याने निषेधात् । दुष्टं ध्यायति—दुर्ध्यः । आतोऽनुपसर्गे कः (३।२।३) दुरो दाशनाशदभध्येषु (६।३।१०० वा०) इति उत्वमुत्वञ्च । आतश्चोपसर्गे कः (३।१।१३६)—आध्यायन्त्येनम् आध्यः । न ध्याख्यापॄमूर्छि

---

1. 'धीतम्' पाठा० । 2 'वैरायपचये' पाठा० ।

3. कृत्यल्युटो बहुलम् (३।३।११३) इति बहुलवचनात् ।

4. 'न्यङ्गे' पाठान्तरम् । 'न्यङ्गविधाने' इति क्षीरस्वामी (धा० वृ० पृष्ठ १६७) । धै न्यङ्करणे । कुत्सितमङ्गं न्यङ्गम् इति हेमचन्द्रः (धातु० १।२६) ।

5. महाभाष्ये नैतादृशं वचनं क्वचिदुपलभ्यते ।

मदाम् (८।२।५७) इति न निष्ठानत्वम्—ध्यातः। उणादौ धीः[१]। ध्याप्योः सम्प्रसारणं च (उ० ४।११५) इति क्वनिप्—धीवा। छित्वरछत्वर (उ० ३।१) इति धीवरः। मां ध्यायति–मध्यः[२] आतोऽनुपसर्गे कः (३।२।३)। सन्ध्यायन्त्यस्याम् इति सन्ध्या[३] ॥८८६॥

६४८. रै शब्दे। रायति। इदाधारा (उ० ३।४०) इति कः—राका। राशादिभ्यां त्रिप् (उ० ४।६७) रात्रिः। रातेर्डैः (उ० २।६६)—रा धनम्। अदादौ रा दाने (२।४१) रातिः[४] ॥८८७॥

६४९. ष्ट्यै स्त्यै शब्दसंघातयोः। ष्ट्यायति[५]। स्त्यायति उभयोपदेशे उपादानाद् धात्वादेः षः सः (६।१।६४) नास्ति[५]। स्त्यः प्रपूर्वस्य (६।१।२३) इति सम्प्रसारणम्, प्रस्त्योऽन्यतरस्याम् (८।२।५४) इति वा निष्ठानत्वम्—प्रस्तीतः प्रस्तीमः। श्यास्त्या (उ० २।४६) इतीनच्—स्त्येनः। स्तेनयतेः (१०।२८७) स्तेनः। स्त्यायतेर्ड्रट् (उ० ४।१६५)—स्त्री ॥८८८,८८९॥

६५०. खै खदने[६]। खायति। ल्युटि खानम् आहुः[७] ॥८९०॥

---

१ नैतदुणादौ सिद्ध्यति। ध्यायतेः सम्प्रसारणं च (३।२।१७८ वा०) वार्तिकेनास्य सिद्धिर्भवति।

२. तुलनीयम्—'मां ध्यायतीति मध्यमिति धातुपारायणीयम्' इत्युज्ज्वलदत्तः (उ० सू० ४।११२)।

३. आतश्चोपसर्गे (३।३।१०६) इत्यङ् भवति।

४. इतोऽग्रे 'धनम्' इत्यधिकं क्वचिद्।

५. काशकृत्स्नधातुपाठीयकन्नडटीकायामपि 'ष्ट्यै' इत्यस्य 'ष्ट्यायति' इति सत्वाभावमेवोदाहृतम् (पृष्ठ ६९)। शाकटायनोऽप्येवमेव। पुरुषकारस्तु मतमिदं स्मृत्वा निराचकार (पृष्ठ १६)। सायणोऽपि तथैव प्रतिपेदे (धा० वृ० पृष्ठ १६८)।

६. खदनं स्थैर्यं हिंसा च इति सायणः (धा० वृ० [illegible] १६८)। काशकृत्स्नीयधातुपाठे 'खै खादने' इति पठ्यते, 'भक्षणार्थत्वं च' तट्टीकायां व्याख्यायते (पृष्ठ ७०)

७. काशकृत्स्नधातुपाठीयकन्नडटीकायां 'खानम्' इत्युदाह्रियते (पृष्ठ ७०)। वाक्यमिदं क्वचिन्न।

६५१. क्षै जै सै क्षये । क्षायति । निष्ठायां क्षायो मः (८।२।५३) क्षामः । जायति । जाता[1] । सायति । साता । सायात्—स्यतेर्ग्रहणादेत्वं[1] न । असासीत्—स्यतेर्ग्रहणाद् विभाषा घ्राधेट् (२।४।७८) इति सिज्लुक् नास्ति ॥८९१-८९३॥

६५२. कै गै शब्दे । कायति, गायति । एतौ शब्दविशेषे रूढौ[2]। इण्भीकापा (उ० ३।४३) इति कन्—काकः[3]। अगासीत् . इणादेशस्य तु गातिस्था (२।४।७७) इति सिज्लुक्[4]—अगात् । अच्यणेय (३।४।६८) इति गेयः कर्तरि साधुः । गस्थकन् (३।१।१४६)—गायकः । ण्युट् च (३।१।१४७) गायनः । गापोष्टक् (३।२।८) सामग उद्गाता । कमिमनिजनि (उ० १।७३) इति तुन्—गातुः । उषिकुषिगा (उ० २।४) इति थन्—गाथा । गश्चोदि (उ० २।१०) इति थक्-उद्गीथ ओंकारः । घुमास्थागापा (३।४।३६) इतीत्वम्—गीतं गानम् । स्थागापापचो भावे (३।३।९५) गीतिः । गाङ् गतौ (१।६८०) गाते ॥८९४,८९५॥

६५३. स्त्यै श्रै पाके । स्त्यायति, श्रायति । श्रा पाके (१।५४७) मित्—श्रपयति । श्रातेः (२।४५) श्रपेश्च [ण्यन्तान्मित्त्वे] च शृतं पाके (६।१।२०) साधु ॥८९६,८९७॥

६५४. पै ओवै शोषणे । पायति । पियादेशो (द्र० ७।३।७८) नेष्यते[4] । इह[5] पा पाने (१।६५७)—पिबति । अदादौ—पा रक्षणे (२।४८) पाति । वायति । ओदितश्च (८।२।४५) इति निष्ठानत्वम्—वानं शुष्कम् । कृवापा (उ० १।१) इति वायुः । अदादौ वा गतिगन्धनयोः (२।४२) वाति । चुरादौ वा गतिसुखसेवनयोः (१०।२६७) वापयति ॥८९८,८९९॥

६५५. ष्टै वेष्टने । स्तायति । स्तायुः । अदादौ ष्णा शौचे (२।४५)—स्नाति ॥९००॥

---

१. घुमास्था (६।४।६६) इति सूत्रे स्यतेर्ग्रहणाद् 'एर्लिङि' (६।४।६७) इत्येत्वं नेति भावः ।

२. स्मृतमिदं धातुवृत्तौ (पृष्ठ १६९) ।

३. कायतेः शब्दविशेषत्वद्योतनार्थमेव तिङन्तमध्ये काकपदनिर्वचनमुक्तम् ।

४. गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् (२।४।७७ वा०) इति वचनात् ।

५. भ्वादावित्यर्थः ।

६५६. दैप् शोधने । पकारो दाधाघ्वदाप् (१।१।२०) इति विशेषणार्थः । दायति । अवदातं मुखम् । इह[1] दाण् दाने (१।६१२)—यच्छति, देङ् रक्षणे (१।६८६) दयते, अदादौ दाप् लवने (२।५१) दाति । ह्वादौ डुदाञ् दाने (३।९) दत्ते, ददाति । दिवादौ दो अवखण्डने (४।३९)—द्यति ॥२०१॥

६५७. पा पाने । पाघ्राध्मा (७।३।७८) इति पिबः—पिबति । अदन्तत्वाद् गुणाभावः । घुमास्थागापा (६।४।६६) इतीत्वम्—पीयते । एर्लिङि (६।४।६७)—पेयात् । गातिस्थाघुपा (२।४।७७) इति सिज्लुक्—अपात् । शाच्छासाह्वा (७।३।३७) इति युक्—पाययते, न पादम्याङ्यमाङ्यस (१।३।८९) इति परस्मैपदं नास्ति[2] । लोपः पिबतेरीच्चाभ्यासस्य (वा० ७।४।४) इत्यपीप्यत्—कृतौ कुण्डपाय्यः (सू० ३।१।१३०) साधुः । पाय्यसान्नाय्य (३।१।१२९) इति पाय्यो माने साधुः । पाघ्राध्मा (३।१।१३७) इति शः—उत्पिबः । अनुपसर्गाण्णः (सू० ३।१।१४१) पचेति पायः । गापोष्टक्—सुरासीध्वोः पिबतेः (३।२।८ सू० वा०)—सुरापः । पानीयम् । घञर्थे कविधानम् (३।३।५८ वा०)—प्रपा । स्थागापापचो भावे (३।३।९५) पीतिः । कृवापाजि (उ० १।१) इत्युण् पायुः । पातृतुदि (उ० २।७) इति थक्—पीथः । ष्ट्रन् (दश० ८।७१) पात्रम् । मनिन् (दश० उ० ६।७३) पामा । पिबतेरी च (श्वेत० उ० ४।११२) इत्यसुन्—पयः । पिबतेरथुक् (तु० उ० ४।२०३)—पाथः अम्बु । पानीविषिभ्यः पः (उ० ३।२३)—पापम् । सानसिवर्णसि (उ० ४।१०७) इति पवनम् । पाको[3] बालः । कलापकः[4] । पम्पा[5] सरः ॥२०२॥

६५८. घ्रा गन्धोपादाने । पाघ्रा (७।३।७८) इति जिघ्रः[6]—

---

१. गादावित्यर्थः ।   २. कर्त्रभिप्राय इति शेषः ।

३. अर्भकपृथुकपाका वयसि (उ० ५।५३) ।

४. द० दशपादी-उणादिवृत्तिः ३।५ ॥

५. द० दशपादी-उणादिवृत्तिः ७।७ ॥

६. पिबजिघ्रधमादयो वस्तुतः स्वतन्त्रा धातवः । अत एवार्धधातुकेऽपि जिघ्रधातुरुपलभ्यते । यथा—गोभिलगृह्ये (२।८।२२,२४) अभिजिघ्रन्, अभि—जिघ्रणं चेति ।

जिघ्रति । नान्यस्य संयोगादेः (६।४।६८) इति वा पक्षम्—घ्रेयात् घ्रायात् । विभाषा घ्रा (२।४।७८) इति वा सिज्लुक्—अघ्रात् अघ्रासीत् । ई घ्राध्मोः (७।४।३१)—जेघ्रीयते । जिघ्रतेर्वा (७।४।६) इत्—अजिघ्रिपत् अजिघ्रपत् ॥९०३॥

९०९. ध्मा शब्दाग्निसंयोगयोः । शब्दे, मुखादिना चाग्निसंयोगे । पाघ्राध्मा (७।३।७८) इति धमः—धमति । श्याः (द्र० ३।१।१३७) विधमः । आध्मातः शङ्खः । नासिकास्तनयोर्ध्माधेटोः (३।२।२९) खश्—नासिकन्धमः । नाडीमुष्ट्योश्च (३।२।३०)—नाडिन्धमः । उग्रम्पश्येरम्मदपाणिन्धमाश्च (३।२।३७) । ध्मो धमश्च (दु० उ० १।३५) इति क्वुन्—धमकः । धर्तिसुधमि (उ० २।१०३) इत्यनिः—धमनिर्नाडी । बाहुलकाद्[1] धमादेशः । धमिः प्रकृत्यन्तरमित्येके[2] । यथा—धान्तो[3] धातुः[4] पावकस्येव राशिः[5] ॥

९१०. ष्ठा गतिनिवृत्तौ । षस्तिष्ठादेशः (द्र० ३।७८) तिष्ठ-

---

हिरण्यकेशीये (२।४।१७) च 'धमिजिघ्र' इत्युपलभ्यते । एवमेव 'घ्रा' धातोरपि 'घ्राङ्कि मातेश्च' इत्युणादिसूत्रे (५।६२) शितेपि सार्वधातुके जिघ्रादेशो न भवति । एवं धमेरपि । उत्तरधातुसूत्रव्याख्यान तट्टिप्पणी च द्रष्टव्या । एतद्विषये विशेषतः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्यायो (पृष्ठ ३८) द्रष्टव्यः ।

१. अत्र शिविरामहोदयन 'बहुलमन्यत्रापि' (उ० २।३९) इत्युणादिसूत्रम-परिज्ञाय 'उणादयो बहुलम्' (३।३।१) इत्यस्य सत्त्वा निर्दिष्टा । तुलनीया दशपादुणादिवृत्तिः—तथा (बहुलं) ध्मश्चान्यत्रापि धमादेशो भवति'(द० उ० ३।६ पृष्ठ १३२) क्षीरस्वामी दशपाद्युणादिवृत्ति - शब्दतोऽर्थतो वा बहुनोद्धरति (द्र० क्षीर० भूमिका) ।

२. कस्येद मतमिति न ज्ञायते । वस्तुतः पिबजिघ्रधमादीनि प्रकृत्यन्तराण्येवेत्युक्तम् । तथा च धमेरार्धधातुके स्वयमेव ग्रन्थकृता प्रयोग उदाहृतः । रामायणेऽपि 'विधमिष्यामि जीमूतान्' इति सुन्दरकाण्डे (६७।१२) प्रयुज्यते । अत्र पूर्वधातुस्था टिप्पण्यपि द्रष्टव्या ।

३. दशपाद्युणादिवृत्तौ (३।५ पृष्ठ १३२) क्वचित् 'ध्मातः' पाठः, क्वचिद् 'धाता' । तथापि 'धान्तः' इत्येव युक्तः पाठः । हैमोणादिवृत्तावपि 'धान्तः' इत्येव (३३, पृष्ठ ९) पठ्यते ।

४. दशपाद्युणादिवृत्तौ क्वचित् 'धातुः' नास्ति । (३।६, पृष्ठ १३२) ।

५. 'काञ्चनस्येव राशिः' इति दशपाद्युणादिवृत्तौ पाठः (३।६ पृष्ठ १३२)

ति। समवप्रविभ्यः स्थः (१।३।२२) इत्यात्मनेपदम्—सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते। स्थाघ्वोरिच्च (१।२।१७) समस्थित, समस्थिषाताम्। आङः स्थः प्रतिज्ञाने (१।३।२२ वा०) उपसंख्यानम्—अस्तिं सकारमातिष्ठते[1], शब्दं नित्यमातिष्ठते, नित्यत्वेन प्रतिजानीत इत्यर्थः। प्रकाशनस्थेयाख्ययोश्च (१।३।२३)—तिष्ठते कन्या छात्रेभ्यः, श्लाघह्नुङ्स्था (१।४।३४) इति सम्प्रदानसंज्ञा; संशय्य कर्णादिषु तिष्ठते यः (किरात ३।१४)। उदोऽनूर्ध्वकर्मणि, तद् ईहायाम् (१।३।२४ सू० वा०) गेह उत्तिष्ठते, मुक्तावुत्तिष्ठते; नेह—पीठादुत्तिष्ठति, ग्रामाच्छतमुत्तिष्ठति। उपान्मन्त्रकरणे (१।३।२५) ऐन्द्र्या गार्हपत्यमुपतिष्ठते[2], आग्नेय्याऽऽग्नीध्रमुपतिष्ठते[3]; नेह—भर्तारमुपतिष्ठति यौवनेन, उपनह्युः प्रकृतयः। अकर्मकाच्च (१।३।२६) भोजन उपतिष्ठते। अपाद् देवपूजासंगतकरणमित्रकरणपथिषु इति वाच्यम् (तु० १।३।२५ वा०)—आदित्यमुपतिष्ठते, गंगा यमुनामुपतिष्ठते, उपश्लिष्यतीत्यर्थः[4]। रथिकानुपतिष्ठते[5], मित्रीकरोतीत्यर्थः। अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्राप्नोतीत्यर्थः। वा लिप्सायाम् (१।३।२५ वा०) भिक्षुर्दातॄनुपतिष्ठते, उपतिष्ठति वा। अधिशीङ्स्थासां कर्म (१।४।४६) गृहमधितिष्ठति। घुमास्था (६।४।६६) इतीत्वम्—स्थीयते। उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—अधिष्ठास्यति, अधिष्ठानम्। स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४) अधितष्ठौ। उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) इति सस्य थः, झरो झरि सवर्णे (८।४।६५) इति तस्य[7] लोपः—उत्थितः[8]। गातिस्था (२।४।७७) इति सिज्लुक्—अभ्यष्ठात्। आङ्ग्रिवादप्यवापेऽपि

१. महाभाष्ये १।३।२२ वार्तिकेऽत्रैतन्मतम्। यदाह न्यासकारः—"सकारमात्रमस्तिं धातुमाचिराशिरावार्यः प्रतिजानीते।.........'स श्रुति' इति स पठति।" (भाग १ पृष्ठ २२६)।

२. मै० सं० ३।२।४॥

३. मीमांसा शाबरभाष्ये ३।२।२१ उद्धृतः।

४. 'गंगा......त्यर्थः' क्वचित्।

५. इतोऽग्रे 'महामात्रानुपतिष्ठते' इत्यधिकम्।

६. 'स्रुघ्नम्' मूले पाठः। 'द्वारकाम्' इति क्वचित् पाठा०।

७. सस्येत्यर्थः।

८. इतोऽग्रे 'उत्थितः' इत्यधिकम्।

जिघ्रति । घ्रायस्य संयोगादे ( ६।४।६८ ), इति वा एत्वम्—घ्रेयात् घ्रायात् । विभाषा घ्रा ( २।४।७८ ) इति वा सिज्लुक्—अघ्रात् अघ्रासीत् । ई घ्राध्मोः ( ७।४।३१ )—जेघ्रीयते । जिघ्रतेर्वा ( ७।४।६ ) इत्—अजिघ्रिपत् अजिघ्रपत् ॥९०२॥

९५९. ध्मा शब्दाग्निसंयोगयोः । शब्दे, मुखादिना चाग्निसंयोगे । पाघ्राध्मा (७।३।७८) इति धम —धमति । दा (द्र० ३।१।१३७) विधमः । आध्मातः शङ्खः । नासिकास्तनयोर्ध्माधेटोः (३।२।२०) खश्—नासिकन्धमः । नाडीमुष्ट्योश्च (३।२।३०)—नाडिन्धमः । उग्रम्पश्येरम्मद पाणिन्धमाश्च (३।२।३७) । ध्मो धमश्च (द० उ० ७।३०) इति क्वुन्—धमकः । वर्तिसुध्वधमि (उ० २।१०३) इत्यनि —धमनिर्नाडी । बाहुलकाद्[1] धमादेशः । धमि: प्रकृत्यन्तरमित्येके[2] । यथा—धानो[3] धातु[4] पावकस्येव राशि[5] ॥

९६०. ष्ठा गतिनिवृत्तौ । खस्तिष्ठादेश (द्र० ३।७८) तिष्ठ

* हिरण्यकेशीये ( २।४।१७ ) च 'अमिजिघ्रत्' इत्युपलभ्यते । एवमेव 'घ्रा' धातोरपि 'घ्राङि घ्रातेश्च' इत्युणादिसूत्रे (५।६३) शितपि सार्वधातुके जिघ्रादेशो न भवति । एवं ध्मेरपि । उणादिधातुसूत्रव्याख्यान तट्टिप्पणी च द्रष्टव्या । एतद्विषये विशेषतः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्यायो (पृष्ठ ३८) द्रष्टव्य ।

१ अत्र लिबिशमहोदयेन 'बहुलमन्यत्रापि' (उ० ८।३९) इत्युणादिसूत्रम् परित्याज्य 'उणादयो बहुलम्' (३।३।१) इत्यस्य सङ्ख्या निर्दिष्टा । तुलनीया दशपादुणादिवृत्ति –तथा (बहुल) ग्रहणादन्यत्रापि धमादेशो भवति (द० उ० ३।६ पृष्ठ १३२) क्षीरस्वामी दशपाद्युणादिवृत्ति शब्दतोऽर्थतो वा बहुशोऽद्धरति (द्र० क्षीर० भूमिका) ।

२. कस्येदं मतमिति न ज्ञायते । वस्तुतः पिबजिघ्रधमादीनि । प्रत्यन्तराण्येवेत्युक्तम् । तथा च धमेरार्धधातुके स्वयमेव ग्रन्थकृता प्रयोग उदाहृत । रामायणेऽपि 'विधमिष्यामि जीमूतान्' इति सुन्दरकाण्डे (६७।१२) प्रयुज्यते । अत्र पूर्वधातुस्था टिप्पण्यपि द्रष्टव्या ।

३ दशपादुणादिवृत्तौ (३।९ पृष्ठ १३२) क्वचित् 'धम' पाठ, क्वचिद् 'धाता' । तत्रापि 'धात' इत्येव युक्त पाठ । हैमोणादिवृत्तावपि 'धात' इत्येव (१३, पृष्ठ ९) पठ्यते ।

४ दशपादुणादिवृत्तौ क्वचित् 'धातु' नास्ति । (३।९, पृष्ठ १३२) ।

५ 'काञ्चनस्येव राशि' इति दशपादुणादिवृत्तौ पाठः (३।६ पृष्ठ १३२)

ति । समवप्रविभ्यः स्थः (१।३।२२) इत्यात्मनेपदम्—सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते । स्थाघ्वोरिच्च (१।२।१७) समस्थित, समस्थिषाताम् । आङः स्थः प्रतिज्ञाने (१।३।२२ वा०) उपसंख्यानम्—अस्ति सकारमातिष्ठते[1], शब्दं नित्यमातिष्ठते, नित्यत्वेन प्रतिजानीत इत्यर्थः । प्रकाशनस्थेयाख्ययोश्च (१।३।२३)—तिष्ठते कन्या छात्रेभ्यः, श्लाघह्नुङ्स्था (१।४।३४) इति सम्प्रदानसंज्ञा; संशय्य कर्णादिषु तिष्ठते यः (किरात ३।१४) । उदोऽनूर्ध्वकर्मणि, उद ईहायाम् (१।३।२४ सू० वा०) नेह उत्तिष्ठते, मुक्तावुत्तिष्ठते; नेह—पीठादुत्तिष्ठति, ग्रामाच्छतमुत्तिष्ठति । उपान्मन्त्रकरणे (१।३।२५) ऐन्द्र्या गार्हपत्यमुपतिष्ठते[2], आग्नेय्याऽऽग्नीध्रमुपतिष्ठते[3]; नेह—भर्तारमुपतिष्ठति यौवनेन, उपतस्थुः प्रकृतयः । अकर्मकाच्च (१।३।२६) भोजन उपतिष्ठते । उपाद् देवपूजासंगतकरणमित्रकरणपथिषु इति वाच्यम् (सू० १।३।२५ वा०)—आदित्यमुपतिष्ठते, गंगा यमुनामुपतिष्ठते, उपश्लिष्यतीत्यर्थः[4] । रथिकानुपतिष्ठते[5], मित्रीकरोतीत्यर्थः । अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्राप्नोत्यर्थः । वा लिप्सायाम् (१।३।२५ वा०) भिक्षुर्दातॄनुपतिष्ठते, उपतिष्ठति वा । अधिशीङ्स्थासां कर्म (१।४।४६) गृहमधितिष्ठति । घुमास्था (६।४।६६) इतीत्वम्—स्थीयते । उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—अधिष्ठास्यति, अधिष्ठानम् । स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४) अधितष्ठौ । उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) इति सस्य थः, झरो झरि सवर्णे (८।४।६५) इति तस्य[7] लोपः—उत्थितः[8] । गातिस्था (२।४।७७) इति सिज्लुक्—अभ्यष्ठात् । अवस्थितादस्म्यत्रापेऽपि

---

१. महाभाष्ये १।३।२२ आपिशलेरेतन्मतम् । यदाह न्यासकारः—"सकारमात्रमस्तिं धातुमापिशलिराचार्यः प्रतिजानीते ।······'स भुवि' इति स पठति ।" (भाग १ पृष्ठ २२६) ।

२. मै० सं० ३।२।४ ॥

३. मीमांसा शाबरभाष्ये ३।२।२१ उद्धृतः ।

४. 'गंगा······त्यर्थः' क्वचिन्न ।

५. इतोऽग्रे 'महामात्रानुपतिष्ठते' इत्यधिकम् ।

६. 'स्रुघ्नम्' मूले पाठः । 'द्वारकान्' इति क्वचित् पाठ० ।

७. थस्येत्यर्थः ।

८. इतोऽग्रे 'उत्तम्भितः' इत्यधिकम् ।

(८।३।६१) इति षत्वम् । षत्वादे षत्वानाम्[1], स्थेणोरघत्तन्यां च (२।४।३ सू० वा०) इति द्वन्द्वैकत्वम्—प्रत्यष्ठात् कठकौथुमम् । स्थाघ्वोरिच्च (१।२।१७) उपास्थित । तिष्ठतेरित् (७।४।५) अतिष्ठिपत् । भव्यगेयप्रवचनीय (३।४।६८) इति कर्तरि उपस्थानीयश्छात्रो गुरोः । प्रहादौ (द्र० ३।१।१३४) स्थायी । आतश्चोपसर्गे (३।३।१०६) ऽङ्—आस्था, व्यवस्था । प्रष्ठोऽग्रगामिनि (८।३।९२) साधुः । सुपि स्थः (३।२।४) इति क—समस्थः । योगविभागाद् भावेऽपीष्यते—आखूत्थो वर्तते, शल्युत्थो वर्तते । अम्बाम्बगोभूमि (८।३।९७) इति षत्वम्—अम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः । द्यतिस्यति (७।४।४०) इतीत्वम्—स्थितः । गत्यर्थाकर्मक (३।४।७२) इति क्तः—उपस्थितो गुरुं चैत्रः । ग्लाजिस्थश्च ग्स्नुः[2] (३।२।१३९) स्थास्नुः । लषपतपद (३।२।१५४) इत्युकञ्—स्थायुकः । स्येशभास (३।२।१७५) इति वरच्—स्थावरः । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् । (३।३।५८ वा०) प्रस्थः । स्थागापापचो भावे (३।३।९५) क्तिन्—स्थितिः । अजिरशिशिर (उ० १।५४) इति स्थिरस्थविरौ । स्थाचतिमृजेर् (उ० १।११६) इति स्थाली । सम्ये स्थश्छन्दसि (उ० २।१०२) इति ऋन्—सव्येष्ठा सारथिः, स्थास्थिन्स्थूणाम् (८।३।६७ सू० वा०) इति षत्वम् । परमे स्थ किच्च[3] इतीन्—परमेष्ठी ब्रह्मा । स्थो णुः (उ० ३।३७) स्थाणुः । स्थः स्तोऽम्बजबकौ च (तु० उ० ४।९६) स्तम्बः स्तबकः । स्थायी भविष्यति गम्यादयः (३।३।३) प्रस्थायी । स्थूणा, स्थूरा जङ्घालोहपुत्तलिका ॥९०५॥

९९१. म्ना अभ्यासे । अभ्यासः पारम्पर्येण वृत्तिः । म्नो मनः (द्र० ७ ३।७८)—आमनति । आम्नायः । नाम्नसीमन् (उ० ४।१५१) इति नाम ॥९०६॥

९९२. दाण् दाने । णकारो दाणश्च सा चेद (१।३।५५) इत्यर्थः । दाणो यच्छ (द्र० ७।३।७८)—विप्राय यच्छति । दाणश्च सा चेच्च-

1. शाखाना मूलं चरणमुच्यते । तथा च भोजवर्मणः (१२ शताब्द्या) ताम्रपत्रम्—"जमदग्निप्रवराय वाजसनेयचरणाय यजुर्वेदकण्वशाखाध्यायिने…… ।" द्र० 'वैदिक वाङ्मय का इतिहास' संस्क० २, पृष्ठ १७३, १७४। 2. 'ग्स्नुः' पाठा० ।

3. 'परमे स्थ. कित्' इति दश० उ० ६।६१ कपाठः । अमरटीकासर्वस्वकारोऽप्येवमेव पठति, भाग १ पृष्ठ १५,७५ । सरस्वतीकण्ठाभरणेऽपि (२।१।२९२) ।

दाणश्च सा चेच्चतुर्थ्यर्थे (१।३।५५) इति तङ्—दास्या सम्प्रयच्छते । घुकार्यम्—दीयते (द्र० ६।४।६६), सिजलुक् (२।४।७७) अदात् । दायादो मूलविभुजादित्वात् (द्र० ३।२।५ वा०), आतोऽनुपसर्गे कः (३।२।३) नास्ति[1] सोपसर्गत्वात् । प्रे दाज्ञः (३।२।६) अश्वप्रदः । गोदः (द्र० ३।२।३) । दो दद्घोः (७।४।४६) दत्तः । अच उपसर्गात् तः (७।४।४७) प्रत्तम् । दस्ति (६।३।१२४) इति दीर्घः—धीत्तम् । दाधेट्सिशदसदो रुः (३।२।१५९)—दानशीलो दारुः ॥९०७॥

९९३. हृ‍ कौटिल्ये । ह्वरति । छित्वरादौ (द्र० उ० ३।१) उपह्वरः ॥९०८॥

९९४. स्वृ शब्दोपतापयोः । स्वरति । समो गम्यृच्छि (१।३।२९) तङ्—संस्वरते । स्वरतिसूति (७।२।४४) इति वेट्—स्वरिता स्वर्ता । सनीवन्तर्ध (७।२।४९) इति सिस्वरिषति सुस्वूर्षति । स्वरः । शृस्वृस्निहि (उ० १।११) इत्युः—स्वरुर्वज्रम् । स्वारयति । चुरादौ स्वर आक्षेपे (१०।२५०) अदन्तः [स्वरयति] ॥९०९॥

९९५. स्मृ चिन्तायाम् । स्मरति । ज्ञाश्रुस्मृदृशां सनः (१।३।५७) इत्यात्मनेपदम्—सुस्मूर्षते । स्मृ आध्याने (१।५४४) मित्—स्मरयति । अत् स्मृदृत्वर (७।४।९५) इति असस्मरत् । स्मरः । स्मृतिः ॥९१०॥

९९६. दॄ वरणे[2] । वरणं स्थगनम् । द्वरति । घञ् (द्र० ३।

---

१. दायाद इत्यत्र आङ्पूर्वत्वात् कस्य प्राप्तिर्नास्तीत्यर्थः ।

२. काशकृत्स्नचन्द्रजैनशाकटायनीयेषु धातुपाठेषु क्षीरमैत्रेयदीक्षितादिकृतेषु धातुव्याख्यानेषु, च अविगीतत्वेन 'दॄ' पठ्यते (अनादरे-मैत्रेयः, संवरणे दीक्षितः) । सायणोऽपि सायणो धातुवृत्तौ (पृष्ठ ११७) 'क्वचित् पठ्यते' इत्याह । हस्तलेखेषु प्रायेण 'धृ संवरणे' पाठ उपलभ्यते । वस्तुतस्तूभावपि स्वतन्त्रौ धातू । 'दॄ' धातोः 'द्वाः, द्वारः' इत्यादयः सिध्यन्ति, 'धृ' धातोश्च 'वाः, वारः' इत्यादयो द्वारपर्यायाः । आसीच्च वार-शब्दस्य द्वारार्थे पुरा प्रयोगो लाटदेशे (सौराष्ट्रस्तो नीचैः) (द्र० तन्त्रवार्तिक १।३।२२) । अद्यापि वारशब्दस्य स्त्रीलिङ्ग 'बारी' पदं (बारी वा) गुर्जरवाहीकराजस्थानीयभाषासु सम्प्रति गवाक्षार्थे प्रयुज्यते (अत्र ह्रस्वार्थे ङीप्प्रत्ययः । यथा—घट-घटी) । नीचीनबारं (ऋ० ५।८५।३) जिह्मबारं (ऋ० १।११६।९।।८।४०।५) इत्यादिषु प्रयुज्यमानो बारशब्दोऽप्येतदर्थक एव । तदर्थं 'धृ' धातुरुक्तः । प्रामादिको

३।१९) द्वारम्[१]। द्वारयतेरणादिकिन्[२] द्वाः [द्वारौ] द्वारः ॥२११॥

९६७. सृ गतौ। संरति, प्रसरति। पाघ्राध्मा (७।३।७८) इति वेगितायां गतौ धावादेशः[३]—धावति। श्रयुकः (७।२।११) इति नेट्—सस्रुव। सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) लुङि अङ्—असरत्। उपसर्या काल्या प्रजने (३।१।१०४)। राजसूयसूर्य (३।१।११४) इति सूर्यः। पुसृल्वः समभिहारे वुन् (३।१।१४९) सरकः। सर्तेर्यः[४] सरति सर्पति वा—सर्यः[५]। ण्वुल्—अभिसारिका। पुरोऽग्रतोऽग्रेषु सर्तेः (३।२।१८) टः—पुरःसरः, अग्रतःसरः, अग्रेसरः। पूर्वे[१] कर्तरि (३।२।१९) पूर्वसरः। सम्पृच (३।२।१४२) इति—परिसारी। बाहुलकात्[१] विसारी। प्रे लपसृ (३।२।१४५) प्रसारी। उद्प्रतिभ्यामाङि सर्तेः (३।२।७८ कारिका)—उदासारी, प्रत्यासारी। जुचङ्क्रम्य (३।२।१५०) इति युच्—सरणः। सृघस्यदः क्मरच् (३।२।१६०) सृमरः। सृ स्थिरे, व्याधिमत्स्यबलेषु च (३।३।१७ सू०,वा०) घञ्—चन्दनसारः, अतीसारः, विसारः, सारम्। प्रजने सर्तेः (३।३।७१) अप्—उपसरो गवाम्। घञ् (द्र० ३।३।१८, १९) आसारः संसारः। बाहुलकात्[२] विसरप्रसरौ।

वुन् (द्र० ३।१।१४९) सरकः। सर्तेर्णिद् (दश० उ० ६।३०) इति यन्–सार्यः। सरतेरसुन् (द्र० दश० उ० ९।५०१) अप्सु सृता अप्सरसः। दृसृ-कटिपुषिभ्य इतिः (उ० ४।६७)—सरित्। असुन् (दश० उ० ९।४६)—सरः। अर्तिसृधृधम्य० (उ० २।१०२) सरणिः। सर्तेरटिः[1] (उ० १।१२४) सरट्। शकादिभ्योऽटन् (उ० ४।८१) सरटः कृकलासः। सर्तेर्युः (उ० ३।२२)—सरयुः, सरयूर्नदी। सर्तेरपः षुक् च (उ० ३।१४१) सर्षपः। अण्डन् कृसृ (उ० १।१२९) इति सरण्डः। सर्तेर्नुट् च (द० उ० ३।४२) इतीकक्—सृणीका लाला। जनिदाच्युसृ (दश० उ० १०।१५) इति निक्[2]—सृणिरङ्कुशः। सर्तेर्णित् (दश० उ० २।४२) सारथिः। ह्वादौ स सृ गतौ (३।१७) सिसर्ति। चुरादौ (१०।२५५ दुर्गमते) सारयति। युच् (द्र० ३।३।१०७) सारणा सन्धीयोजना। ल्युट् (द्र० ३।३।११७) सारणी सेककुल्या ॥२१२॥

६६८. ऋ गतिप्रापणयोः। पाघ्राध्मा० (द्र० ७।३।७८) ऋच्छति। समो गम्यृच्छिप्रच्छिस्वरत्यर्ति (१।३।२९ कारिका) इत्यात्मनेपदम्—समृच्छते। शप्योऽर्तिसंयोगाद्योः (७।४।२९) अर्यते। ऋच्छिवृचिमिमूर्च्छ्यर्त्यर्तोर्णोतीनाम् (३।१।२२ वा०) यङ्—अरार्यते। उपसर्गादृति धातौ (६।१।९१) वृद्धिः—उपार्छति। यन्लि—इकार्यतिभ्यदतीनाम् (७।२।६६) आरिथ। सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) इत्यङ्—आरत्। स्मिपूङ्रञ्ज्वशां सनि (७।२।७४) इतीट्—अरिरिषति। अर्तिह्रीब्लीरी (७।३।३६) इति पुक्—अर्पयति, अर्पितः। अर्यः स्वामिवैश्ययोः (३।१।१०३), आर्योऽन्यः। अचि (द्र० ३।१।१३४) अरः। भिदादौ (गण० ३.३।१०४) आरा शस्त्री। ऋणमाधमर्ण्ये (८।२।६०), अन्यत्र ऋतम्। अर्तिलूधूसूखन (३।२।१८४) इतीत्रः—अरित्रं केनिपातकः (अमरकोष १।१०।१३) अर्तेस्तुः (उ० १।७२) कित्च—ऋतुः। अर्तेः किदिच्च (उ० २।५१) इतीनच्—इरिणं निस्तृणं स्थलम्। अर्तिसृध० (उ० २।१०२) इत्यरणिः। अर्तिपृवपि (उ० २।११७) इत्युस्—अरुर्मर्म। अर्तेश्च (उ० ३।६०) इत्युनन्–अरुणः। अर्तेर्निद् (दश० उ० ८।५) इत्यन्यच्—अरण्यम्। अर्तिकमिभ्रमि (उ० ३।१३२) इत्यरन्–अररं कपाटम्। उणादौ—अच इः (४।१३९)

1. '०रटिः' पाठ०।

2. पञ्चपाद्यां (४।१०४) क्तिन्प्रत्ययः, दशपाद्यां तु निक्।

